महाराजाधिराजश्रीभोजदेवविरचितम्

# समराङ्गण-सूत्रधार-वास्तु-शास्त्रम्

## मूलमात्रम्

महामहोपाध्यायश्रीगणपतिशास्त्रिसम्पादितपूर्व

**डा॰ द्विजेन्द्रनाथ शुक्लेन**

वास्तुशास्त्रदिशा कलात्मकप्रबन्धनिबन्धनेनाध्यायानां संस्कारेण

वैज्ञानिकरीत्या च पुनस्सम्पादितं टिप्पणी-

भिश्चालङ्कृतम्



सर्व-विक्रयाधिकारी

**मेहरचन्द लक्ष्मणदास**

२७३६ कूचा चेलां, दरियागज, दिल्ली-६

विक्रय-केन्द्र—१ अन्सारी रोड, दरियागंज, दिल्ली-६

# समर्पणम्

भृगुरत्रिर्वशिष्ठश्च विश्वकर्मा मयस्तथा ।
नारदो नग्नजिच्चैव विशालाक्षः पुरन्दरः ॥
ब्रह्मा कुमारो नन्दीशः शौनको गर्ग एव च ।
वासुदेवोऽनिरुद्धश्च तथा शुक्रबृहस्पती ॥
अष्टादशैते विख्याताः शिल्पशास्त्रोपदेशकाः ।

# प्राक्कथनम्

चत्वारो वेदाः सर्वविदिताः । शिक्षा-कल्प-व्याकरण-निरुक्त-च्छन्दो-ज्यौतिषानि वेदाङ्गान्यपि सर्वविदितानि । चतुर्णामपि वेदानां चत्वार उपवेदा आसन् इति प्रायेण सर्वसाधारणं ज्ञानम् । ऋग्वेदस्यायुर्वेद उपवेदः, यजुर्वेदस्य धनुर्वेद उपवेदः, सामवेदस्य गान्धर्ववेद उपवेदः, अथर्ववेदस्य च स्थापत्यवेद उपवेद इत्यस्माकं सनातनी परम्परा । स्थापत्यवेदस्येत्थं प्राचीनत्वं विभावनीयं भवति । मत्स्यपुराणे भृग्वत्रिवशिष्ठादयो येऽष्टादश वास्तुशास्त्रोपदेशका उपदिष्टाः सन्ति तेषु बहवो वैदिका ऋषयो वैदिककालिका वा महापुरुषा आसन् । अतः स्थापत्यस्य वास्तुशास्त्रस्य वा प्राचीनत्वमविचिकित्सनीयमेव । स्थापत्यं नामोपवेदः अग्रे वास्तुशास्त्रं शिल्पशास्त्रं वेति नाम्ना प्रथितं बभूव । शिल्पानां सुदीर्घा नामावली प्रायेण सर्वविदिता । गीत-वाद्य-नृत्य-आलेख्यादि-चतुष्षष्टिकलानां प्रौढतमः सम्प्रदायः, प्रभूततमः प्रोल्लासश्च पुरातने भारते विजृम्भते स्म इति पुरातत्त्वविदो विद्वांसः सम्यक् जानन्त्येव । वात्स्यायनकामशास्त्रस्यायमुन्मेषो, लब्धप्रतिष्ठस्य यशोधरस्यापीयं मनीषा, शुक्राचार्यस्यापीदमेव समर्थनम्, श्रीमद्भागवत-टीकाकृता श्रीधरेणाथ जीवगोस्वामिना चाप्येवमेव विवृतम् । विष्णुपुराणे तथा हरिवंशे, बौद्धानां ललितविस्तरे, जैनानामुत्तराध्यानसूत्रे, तथा च कल्पसूत्रे, दशकुमारचरिते, कादम्बर्याम्, क्षेमेन्द्रस्य कलाविलासे, समवायसूत्रे, विदर्भराजस्य रामचन्द्रकृतटीकायां, ललितसहस्रनाम्नो नारायणकृतटीकायां, तथा च भास्करराजटीकायां शिल्पानां सुदीर्घा नामावली दृश्यते ।

तथापि कालक्रमेण परिवर्तमानायामस्माकं संस्कृतौ संस्कृते कलाविषयकाणि प्राधान्येन त्रीण्येव शास्त्राणि प्रौढिमभजन्त—वास्तुशास्त्रं, शिल्पशास्त्रं, चित्रशास्त्रं च; यानि समराङ्गण-वास्तुशास्त्र-दिशा वास्तुशास्त्रं स्थापत्यशास्त्रं वेति नाम्ना प्रथन्ते । मानसार-मयमत-शिल्परत्नादिषु द्राविडेषु, विश्वकर्मवास्तुशास्त्रापराजितपृच्छाप्रभृतिषु नागरेषु च वास्तुशिल्पग्रन्थेष्वयमेव विलासः ।

केऽपि विद्वांसो वास्तुशास्त्रं शिल्पशास्त्रान्तर्भूतं मन्यन्ते । पद्धतिरियं पुरातनी । दशम्यां वैक्रमशताब्द्यां जातस्य वदान्यस्य भूपतेः धाराधिपस्य भोजराजस्य समराङ्गणसूत्रधारनाम्नीं कृतिमवलोक्य शिल्पशास्त्रं- चित्रशास्त्रं

च वास्तुशास्त्रान्तर्गतमेव विभाव्यते। एतेन वास्तुशास्त्रस्य व्यापकं क्षेत्रं शिल्पशास्त्रस्य च सीमितं क्षेत्रमिति संगच्छते। प्रायेण वास्तुशास्त्रं गृहनिर्माणविषयकं शास्त्रं कथ्यते। परमत्र देशे गृहनिर्माणेषु प्रासादनिर्माणमेव मौलिमालायते। प्रासादनिर्माणं (देवमन्दिराणां निर्माण) प्रतिमानिर्माणसापेक्षम्, यतो हि प्रासादेषु विमानेषु वा प्रतिमास्थापनं मूर्धन्य कर्म। प्रतिमानिर्माणेषु च चित्रकौशलमप्यासीत् महनीयं कर्म। अतः शिल्पशास्त्रं भास्करीयं बोद्धव्यम्। चित्रमालेख्यमवगन्तव्यम्। इति कृत्वा समराङ्गणदिशा वास्तुशास्त्रस्य प्राधान्येन त्रयः प्रधाना विषयाः—

वास्तु—भवनं (जनभवनं, राजभवनं, देवभवन च),
शिल्पम्—भास्करीयं (प्रतिमा-निर्माणम्),
चित्रम्—आलेख्यम्।

प्राप्तेष्वपि वास्तुशास्त्रीयेषु शिल्पशास्त्रीयेषु वा अन्येषु ग्रन्थेषु समराङ्गण-सूत्रधार एव सम्पूर्णो वास्तुशास्त्रग्रन्थः। मानसारे भवनानां (विमानानाम्) प्रतिमानाञ्चैव वर्णनम्। मयमतेऽप्येतदेव। शिल्परत्ने भवनानां प्रतिमानां चित्राणाञ्चाखिलानां वास्तुशास्त्रविषयाणां प्रतिपादनं वर्तते। समराङ्गणे यन्त्राध्यायोऽपि विराजते, यतो यन्त्रकर्म स्थापत्यान्तर्भूतं विभाव्यते। शयनासनानामपि विवेचनमस्ति। पुर-दुर्ग-भवन-प्रासाद-प्रतिमा-चित्र-यन्त्र-शयनासनादीनां स्थापत्यस्याष्टाङ्गानां सर्वेषां वर्णनं कृत्वा समराङ्गण-सूत्रधार-वास्तुशास्त्रमेवास्माकं स्थापत्यस्याविकलां परम्परां पुष्णाति। समराङ्गण-सूत्रधार-समकालिककृतिरपराजितपृच्छा नामैतदेव समर्थयते। तत्रापि वास्तु-शिल्प-गीत-ताल-वादित्राणां वर्णनं वर्तते।

अस्तु, समराङ्गणसूत्रधारस्य प्रथमं सम्पादनं दिवगतैः प्रख्यातनामभिः पण्डितप्रवरैः गणपतिशास्त्रिमहोदयैः कृतमासीत्। तच्च गायकवाड़-ओरियण्टल-सीरीजेत्यभिधां प्रकाशनमालामाकलय्य गायकवाड़-बड़ौदा-महाराजस्य संरक्षकत्वे चतुर्विंशत्युत्तरैकोनविंशतितमे ईसवीये वर्षे प्रकाशितं बभूव चिरं च तद् बहुमानपात्रं जातम्। साम्प्रतमेतत्प्रकाशनं समाप्तम्। न कापि प्रतिः प्राप्यते। अतोऽत्रोन्मुखोऽहम्।

विद्वांसो जानन्त्येव यदहं किञ्चित्कालाद् समराङ्गणवास्तुशास्त्रमधीयानः सन् वास्तुशास्त्रं भारतीयवास्तुशास्त्र वेति सामान्यविषयमुपजीव्य चतुर्दशग्रन्थानामेकामनुसन्धान-प्रकाशनायोजनां कल्पितवानस्मि। पञ्चैषा ग्रन्थाः प्रकाशिताः, तावन्त एव-प्रकाशनायावशिष्टाः।

ममैतन्महद्गौरवं सौभाग्यञ्चापि यदहं पारिभाषिके वैज्ञानिके चास्मिन् विषये अनुसन्धानार्थी प्रवृत्तः। शास्त्रमिदमतिकठिनम्। न कुत्रापि प्राचीनानि प्रस्थानानि, न कोऽपि प्राचीनः वास्तुकोषो, न कापि परम्परागता सरणिः। शापदुर्विदग्धानां विश्वकर्मीयाणां घोरा गतिरेवात्र किं निदानं यद्वास्तु-वैदुष्यं विप्लुतम्। तथाप्यग्रगामिभी रामराजप्रसन्नकुमाराचार्यादिभिर्वास्तुशास्त्र-संशोधकैर्यः पूर्वः पन्थाः प्रवर्तितस्तेनास्माकं सोत्साहमत्रविषये प्रवृत्तिर्बभूव। समराङ्गणसूत्रधारवास्तुशास्त्राध्ययनेन प्रथमं ग्रन्थस्यैकस्य गरिमाणं, पुनश्चास्य शास्त्रस्य प्रायः समेषामेव ग्रन्थानां महिमानं, पुराणागमतन्त्रप्रतिष्ठापद्धतीनां नानाग्रन्थानां प्रथिमानं च दर्शं दर्शम् उदरम्भरिर्ब्राह्मण इव अशेषशास्त्रालोडन-कृतमतिः वास्तुशास्त्रानुसन्धाने प्रवृत्तोऽभवम्। तदधिकृत्याहं ब्रवीमि—

"अप्रज्ञेयं दुरालोकं गूढार्थं बहुविस्तरम्। प्रज्ञापोतं समारुह्य प्राज्ञो वास्तुनिधिं तरेत्" इति समराङ्गणवचनानुसारेण प्रज्ञापोतं विनैव भगवत्याः सर्वमङ्गलायाः कृपाकरणैनैव किमपि कर्तुं पारये।

साम्प्रतं समराङ्गणसूत्रधारस्य संस्कारपुरस्सरं तस्य च वास्तुज्ञानस्या-द्यत्वे राष्ट्रयोजनायां पुरादिनिवेशगृहनिर्माणादिपरिपाट्यां क उपयोगो भवितुमर्हः इति प्रतिपादनपुरस्सरं राजभाषायां हिन्दीभाषायामपि अनुवादो विधेय इति मनीषया ग्रन्थस्यास्य भागत्रयात्मकः अनुवादः प्रकाशनीयः। हिन्दी अनुवादस्य कृते केन्द्रीयराज्येन किमपि साहाय्यमपि प्रतिश्रुतमस्ति। भागत्रया-त्मकः कोषोऽपि तामेव सरणिमनुसृत्य प्रकाशयितव्यस्तत्रापि च साहाय्यमपेक्षते।

एतस्य समराङ्गणसूत्रधारवास्तुशास्त्रस्याध्ययनकर्मणि प्रवृत्तोऽहं यदा पीएच. डी. उपाधिविषयकं प्रबन्धं प्रस्तुतवानासम् तदैव बहव उन्मेषाः प्रादुरभवन्। तेषु ग्रन्थस्याध्यायानां यो मूलग्रन्थे संग्रहस्संदृश्यते स त्रुटिपूर्णो विभाव्यते स्म। अतः अवसरे प्राप्तेऽसौ संमार्जनीय एव। प्राचीनस्यास्य वास्तु-शास्त्रस्याद्यत्वे वैज्ञानिकदृष्ट्यैवाध्ययनं समीचीनं तदेव चाद्यन्तनिकानां वास्तु-कोविदानां कृते मानार्हं भविष्यति। अथ चास्माकं देशे प्राचीनेयं पद्धतिर्यद्वास्त्वा-रम्भे वास्तुपदविन्यासः (यस्साइटप्लानिंगेति बोद्धव्यः), वास्तुपुरुषप्रतिष्ठा, वास्तुदेवताबलिः, आयादिविचारः (अर्थात् भवनारम्भे नक्षत्रवारतिथ्यादिविचारः), शिलान्यासः, कीलकसूत्रपातः, वास्तुमहोत्सवः (यः शक्रध्वजोत्थानमधिकृत्य इन्द्रमहोत्सवो ज्ञातव्यः)—इमे सर्वे विषयाः प्राथमिका गण्यन्ते स्म। परमत्र ग्रन्थे एतेषां प्राथमिकानां समेषां विषयाणां प्राथमिकेषु अध्यायेषु वर्णनं न दृश्यते। आयादिविचारः षड्विंशेऽध्याये, शिलान्यासः पञ्चविंशे, बलिदानविधिः

षट्त्रिंशे, कीलकसूत्रपातश्च सप्तत्रिंशेऽध्याये वर्तते ।

अन्यच्च प्रथममेव प्रतिपादित यद्वास्तुशास्त्रं पुरा स्थापत्यशास्त्रमिति नाम्ना प्रथते स्म । अतः किंनाम स्थापत्यमष्टाङ्गेन स्थापत्येन च कः परामर्शः, किं स्थपतिलक्षणम्, किञ्च तस्य कौशलमिति सर्वमेव प्राथमिकत्वेन विभावनीयं भवति । परमत्र ग्रन्थे स्थपतिलक्षणाध्यायश्च पञ्चचत्वारिंशः । मन्ये त्रुटिपूर्णोऽयं संग्रहः अध्यायानाम् । लेखकस्य दोषो, न ग्रन्थकर्तुर्दोष इति प्रतीयते । अतोऽस्मिन् ग्रन्थे अध्यायानां परिमार्जनपुरस्सरं तेषां स्थानपरिवर्तनं मया कृतम् । अयं भागो भवननिवेशनमधिकृत्य प्रस्तूयते । अतोऽत्र भागस्यास्यैवाध्यायानां विषये कोऽपि संकेतोऽत्र प्राक्कथने सूच्यते ।

भवननिवेशात्मके भागेऽस्मिन् मया विषयदृष्ट्या चत्वारः पटलाः प्रकल्पिताः—औपोद्घातिकः, सामान्यः, पुरनिवेशः, भवननिवेशश्च ।

औपोद्घातिके पटले विश्वसृष्टौ वास्तुनः किं स्थानं, कथं च तस्य प्रवर्तनं, कश्च तस्य प्रवर्तकः, कश्च संरक्षकः, के के विषयाः, का भवनजन्मकथा वर्णाश्रमप्रविभागे स्थानादिविनिवेशे च का समीक्षेति सर्वमौपोद्घातिकमिति कृत्वामीषां सर्वेषां विषयाणां प्रथमोपन्यासो मूलग्रन्थे यादृशः संग्रहीतस्तादृश एवाविकलोऽत्रापि सन्तिष्ठते ।

सामान्येषु विषयेषु प्रथमं वास्तुकर्तुः स्थपतेः वास्तुकर्मणः स्थापत्यस्य च स्मरणं पुनश्च वास्त्वाधारभूमेः परीक्षा, देशानां विभागः, देशभूमीनां वर्णनं, भूमि-संग्रहः, भूमिपरीक्षा, मृत्तिकापरीक्षा चापतन्ति । ततश्च वास्त्वारम्भे आयादि-विचारः, इन्द्रध्वजोत्थानं, वास्तुपदविन्यासः, वास्तुपददेवताबलिः, वास्तु-संस्थानानि, शिलान्यासः, कीलकसूत्रपातादिश्च संगच्छन्ते । इमे सर्वेऽपि विषयाः समेषामेव वास्तु-कृत्यानां कृते सामान्याः । भवन-निर्माणे, राजवेश्म-रचनायां, प्रासाद-निर्माणे वा प्रतिमा-प्रकल्पने वा चित्रे वा सर्वत्रैवोपजीव्यमाना भवन्ति । अत एतेषां सर्वेषामत्र सामान्यपटले संग्रहः । तत्र च मूलाध्यायानां परिवर्तनं परिमार्जनं स्थानप्रतिष्ठापनञ्चावश्यकं बभूव । तच्च मौलिकाध्यायानां परिमार्जिता-ञ्च तेषां तालिकया स्पष्टं भविष्यति ।

पुरनिवेशेऽत्र द्वावेवाध्यायौ नगरादिसंज्ञा, पुरनिवेशश्च । तावपि एकत्रा-प्रतिष्ठापितौ । भवननिवेशे एकशालादिदशशालान्तानां भवनानां वर्णनेऽतीव परिवर्तनमस्ति । भवनद्रव्ये (वनप्रवेशः), भवनरचनायां (चेयविधिः), भवन-यां (अप्रयोज्यप्रयोज्यानि), भवनाङ्गेषु (द्वारस्तम्भादयः), भवनदोषे (वेधा

भङ्गाश्च), भवनशान्तौ च ये ये अध्यायाः परिवर्तनीयतामपेक्षन्ते स्म ते सर्वे वैज्ञानिकदृष्टया सम्पादिताः। तालिकेयं सर्व स्पष्टीकरिष्यति—

औपोद्घातिकेषु

| | परिमार्जिताध्यायाः | मौलिका |
|---|---|---|
| १. | महासमागमनम् | तथैव |
| २. | विश्वकर्मपुत्रसंवादः | ,, |
| ३. | प्रश्नः | ,, |
| ४. | महदादिसर्गः | ,, |
| ५. | भुवनकोशः | ,, |
| ६. | सहदेवाधिकारः | ,, |
| ७. | वर्णाश्रमप्रविभागः | ,, |

सामान्येषु

| | | |
|---|---|---|
| ८. | स्थपति-लक्षणम् | |
| ९. | अष्टाङ्ग-लक्षणम् | |
| १०. | भूमि-परीक्षा | |
| ११. | हस्त-लक्षणम् | |
| १२. | आयादि-निर्णयः | |
| १३. | इन्द्रध्वजोत्थानम् | |
| १४. | वास्तु-त्रय-विभागः | |
| १५. | नाड्यादिसिरादि-विकल्पः | |
| १६. | मर्म-वेधः | |
| १७. | पुरुषाङ्ग-देवता-निघण्ट्वादि-निर्णयः | |
| १८. | बलिदान-विधिः | |
| १९. | वास्तुसंस्थान-मातृका | |
| २०. | शिलान्यास-विधिः | |
| २१. | कीलक-सूत्रपातः | |

पुरनिवेशे

| | | |
|---|---|---|
| २२. | नगरादि-संज्ञा | |
| २३. | पुर-निवेशः | |

भवन-निवेशे च



एतत्सर्वं भवननिवेशाधिकारे बोद्धव्यम् । अथ प्रासादनिवेशाधिकारे द्वितीयस्य भागस्य परिपाटी प्रस्तूयमाना भविष्यति । तत्रेत्थं विभावनीयं यदमरकोषदिशा 'प्रासादो देवभूभुजामिति' कृत्वा प्रासादशब्दस्यायं सामान्योऽर्थः । समराङ्गणदिशा तु प्रासादशब्देन देवतायतनमेवावगन्तव्यम्, तच्च प्रासादनिवेशे मया सम्यक् प्रतिपादितं वर्तते । परं त्रयाणां भागानामाकारपरिकल्पनवशात् प्रासादनिवेश एव राजगृहस्य राजगृहान्तर्भूतानामश्वशाला-गजशाला-सभा-वेदी-पीठादीनामपि समावेशो विहितः । प्रतिमाविज्ञानात्मका भास्करीयाध्यायाः शिल्पान्तर्भूताः, चित्रोद्देशाध्यायाः चित्रशास्त्रान्तर्भूताः । यन्त्रविधानं शयनासनादिलक्षणं च तक्षककौशलम् । एतत्सर्वं तृतीयस्य भागस्य विषयत्वेन उपकल्पितम् । अत एतेषां समेषां तत्र तत्र विभागे सविस्तरमालोचनं भविष्यतीति दिक् ।

विदुषां वशंवदस्य

**शुक्लोपाह्वद्विजेन्द्रनाथस्य**

# विषयानुक्रमणी

## प्रथमः पटलः (औपोद्घातिकः)

### १. महासमागमनाध्यायः प्रथमः

**वास्तु-त्रयी—वास्त्वाधारः पृथिवी, वास्तु-संरक्षकः पृथुः, वास्तु-आचार्यश्च विश्वकर्मा—**



### २. विश्वकर्मपुत्रसंवादाध्यायो द्वितीयः

**वास्तु-कला-प्रवर्तनम्—आद्यस्थपतेर्विश्वकर्मणः स्वमानससुतानां जयविजयसिद्धार्थापराजितानां वास्तु-कर्मणि विनियोगः—**



### ३. प्रश्नाध्यायस्तृतीयः

**वास्तु-शिल्प-चित्र-यन्त्र-शयनासनादयः वास्तु-शास्त्र-विषयाः—**

## ४. महदादिसर्गाध्यायश्चतुर्थः

**वास्तुसृष्टिश्च—"वास्तु ब्रह्मा ससर्जादौ विश्वमप्यखिलं तथा"—**

जयेन जिज्ञासितानामर्थानां यथासंभवमनुक्रमेण विश्वकर्मणोपदेशः, तत्र प्रथमं महाप्रलयावस्थावर्णनम्, प्रलयावसाने ब्रह्मण आविर्भावः, सृष्ट्युपक्रमश्च, महदहङ्कारादीनां सृष्टिः, महदादिभ्यः पञ्चमहाभूतानां स्वस्वगुणयुक्तानामाविर्भावः, भौतिकसर्गे ब्रह्मणोऽशैः सृष्टाः सुरासुरादयः, कारणजलाद् भूम्युदधिमहीधरनिम्नगाद्वीपानामुत्पत्तिप्रकारः, भूमेरधो रौरवादिनरकाणां सृष्टिः, जरायुजादीनां चतुर्णां भूतानां सृष्टिः, तत्र जरायुजानां विभागः, ग्रामारण्यभेदेन पुनर्द्विधा भिन्नानां तेषां विवरणम् अण्डजस्वेदजोद्भिज्जानां विभागादिकम् । पृ० १४–१६

## ५. भुवनकोशाध्यायः पञ्चमः

**भारतीय-वास्तु-विज्ञानस्य विशाला दृष्टिर्यत्र वास्तु-विनियोजनायामखिलस्यैवास्य विश्वस्य विचारः । समस्तमिदं भूमण्डलं वास्तु-विषयः, अतो भूगोल-वर्णनम् । सौरमण्डलेन प्रभावितमिदं जगदिति सौरमण्डलस्यापि वर्णनम्—**

भूपरिमितिः, सप्तसु द्वीपेषु जम्बूद्वीपवर्णनम्, शाकद्वीपवर्णनम्, कुशक्रौञ्चशाल्मलिगोमेदपुष्करद्वीपानां वर्णनम्, लोकालोकाचलस्थितिपरिमाणादिकम्, सूर्यादीनां स्थितिर्गतिश्च । पृ० १७–२३

## ६. सहदेवाधिकाराध्यायः षष्ठः

**भूतले प्रथम-भवन-जन्म-कथा—**

कृतयुगे मनुष्याणामत्युत्कृष्टा स्थितिः, कालान्तरे क्रमशस्तस्या अपकर्षे हेतुः, च्युतप्रभावानां तेषां तादात्विकी वृत्तिः, क्रमेण रागलोभादीनामुत्पत्त्या तेषां मिथुनीभावेनावस्थानम्, तात्कालिकी लोकस्थितिः, हिमानिलादिवारणाद्यर्थे तेषां गृहापेक्षा, गृहनिर्माणाय तैरुपात्तः प्रथमोपायश्च । पृ० २४–२६

## ७. वर्णाश्रमप्रविभागाध्यायः सप्तमः

**वर्णाश्रमव्यवस्थानुकूला ब्राह्मणादिवर्णानामाश्रमिणाञ्च पुरादिभवनादि-निर्माणापेक्षाथ च वास्तु-विनियोगे सुशासितं राष्ट्रं, सुव्यवस्थितस्समाजः, सुसंस्कृता च व्यक्तिरिति त्रयाणामप्युपादानानामनिवार्यत्वसाधनम्—**

अथैवं दुःखाभिभूतानां लोकानामनुग्रहायादिराजस्य पृथोरभिषेकः, पृथुं प्रति नराणा दुःखापनोदनप्रार्थनम्, पृथुना कृतो वर्णविभागस्तद्धर्माश्च,

आश्रमविभागस्तद्धर्माश्च, शिष्यधर्माः स्त्रीधर्माश्च, सर्वेषा वृत्यर्थं खेटग्रामादि-कल्पनम् । पृ० २७–२६

## द्वितीयः पटलः (सामान्यः)

### ८. स्थपतिलक्षणाध्यायोऽष्टमः

**वास्तु-कर्ता स्थपतिस्तस्य च शास्त्र-कर्म-प्रज्ञा-शील-समन्विता चतुर्धा दीक्षा । सामुद्रगणितज्यौतिषादीनां वास्तुशास्त्रस्याष्टाङ्गानां परिपूर्णं ज्ञानम्—**

स्थपतेर्लक्षणम्, वास्तुशास्त्रस्याष्टाङ्गानि, स्थपते कृत्यविशेषाः, शास्त्रमविज्ञाय प्रयोक्तुः स्थपतेर्घातः, अविदुषः स्थपतेर्निन्दा, केवलशास्त्रज्ञस्य केवलकर्मज्ञस्य वा तस्य प्रयोगकाले सम्पद्यमाना दोषाः, कर्मविदः स्थपतेर्लक्षणम्, शास्त्रकर्मसामर्थ्ये विद्यमानेऽपि प्रज्ञाभावे तस्य सम्भाव्यमाना दोषाः, प्रज्ञावत एव तस्य सर्वकर्मनिर्वहणक्षमत्वस्थापनम्. सर्वेषु स्थपतिगुणेषु सत्स्वपि शीलाभावे कर्मवैफल्यस्य विपरीतफलोपनमनस्य च निरूपणम्, आलेख्याद्यष्टविधकर्मविज्ञानस्याप्यावश्यकता । पृ० ३३–३४

### ९. अष्टाङ्गलक्षणाध्यायो नवमः

**वास्तु-कर्म—वास्तुपुरुषविकल्पन-पुरविनिवेशरथ्याप्राकारादिनिवेश-प्रासाद-कर्म-इन्द्रध्वजोत्थान-राजवेश्म-चातुर्वर्ण्यभवनविभाग - यजमानशालायज्ञवेदीकोटि-होम-राजशिविरदुर्गादिनिवेशात्मकम् अष्टविध स्थापत्यम् । चतुर्धा स्थापत्यं स्थपतियोग्यतानुवर्ति, अष्टधा च स्थापत्यशास्त्रानुवर्तीति विज्ञेयम्—**

स्थापत्याष्टाङ्गविवरणम्, नृपालस्थपतेर्गुणाः, अङ्गेषु सप्तमस्य यज्ञ-शालामानस्य प्रयोगः, तत्र यज्ञशालानिवेशनविधि , यजमानकुटीप्रमाणादिकम्, प्राग्वंशपरिकल्पनम्, प्रक्रमनिवेशनविधि·, वेदीकल्पनम् होमस्थानकल्पनम्, यजमानस्थानकल्पनम्, कोटिहोमलक्षहोमस्थानादि, सर्वाङ्गेषु याज्ञिकाङ्गस्य प्राशस्त्यम्, यज्ञभूमिमापने विहृत वास्तुपदम्, अष्टमस्य राजशिविर-निवेशाख्यस्याङ्गस्य निरूपणम्, तत्र शिविराणामाकृतिविशेषाः, शिविर-द्वारसख्या, रथ्याप्रमाणम्, नरपते. स्थानम्, मन्त्रिपुरोहितबलाध्यक्षान्त-पुरभाण्डागाराणा स्थानानि, अश्वानां दन्तिनां च स्थानानि, परिखाप्रमाणम्, शिविरस्थानमापनोचित वास्तुपदम्, अष्टमाङ्गावशिष्टस्य दुर्गकर्मणो निरू-पणारम्भः, तत्र षड्विधाना दुर्गाणा सज्ञाः, तेषु प्रशस्त दुर्गम्, दुर्गस्थान-विभाजनार्ह वास्तुपदम्, हर्म्यप्रमाणादिकम्, रथ्योपरथ्याद्वाराणां प्रमाणानि,

दुर्गेश्वरप्रासादानां स्थानानि, दुर्गरक्षार्थं स्थाप्यानां वीराणा लक्षणम्, अन्तः-पुरादीनामपि तत्र निवेशनीयत्वकथनम् । पृ० ३५–३८

## १०. भूपरीक्षाध्यायो दशमः

**वास्तु-परीक्षा—भू-परीक्षा, देश-चयनं, भूमि-संग्रहः, मृत्तिकापरीक्षाप्रकाराश्च—**

भूमेः सामान्यतो जाङ्गलादिभेदेन त्रैविध्यं, तल्लक्षणञ्च, त्रिविधाया अपि भूमे. पुनर्बालिशस्वामिन्यादिभेदेन षोडशधा विभागस्तल्लक्षणं च, जनपदादिनिवेशनोचिता भूमयः, दुर्गनिवेशनोचिता भूमयः, पुरनिवेशने प्रशस्ता भूमयः, सर्ववर्णोचिता भूमिः, तत्तद्वर्णोचिता भूमयः, अपरा सर्वसाधारणी भूमि', पुरादिनिवेशनेषु वर्ज्यानां भुवा लक्षणम्, कृष्यमाणाया भुवि काष्ठादिदर्शने फलम्, अन्यानि भूपरीक्षणानि (मृत्तिका-परीक्षण-प्रकाराः)। पृ० ३९–४४

## ११. हस्तलक्षणाध्याय एकादशः

**वास्तु-मानम्—मानाधाराः मेयानि च । "मानं धाम्नस्तु संपूर्ण जगत्सं-पूर्णता भवेत्", "वास्तुमानेन यो रम्य सः रम्यो नेतरः क्वचित्", "यच्च येन भवेद् द्रव्यं मेयं तदपि कथ्यते—**

हस्तलक्षणम्, हस्तदण्डनिर्माणप्रकारः, तद्देवतानां स्थानवेधे फलम्, तासा स्थानविशेषेषु करधारणे फलम्, प्राशयादीना त्रयाणा हस्त-विशेषाणां लक्षणम्, पुरादीनां माने तेषां विनियोगप्रकारः, मात्राकलादिकानां सामान्यमानानां लक्षणम्, एकादीनि सङ्ख्यास्थानानि, निमेषादीनि काल-मानानि । पृ० ४५–४८

## १२. आयादिनिर्णयाध्यायो द्वादशः

**वास्तु-आरम्भस्तत्र नक्षत्रादिविचारः—भारतीयं स्थापत्यं ज्यौतिषेना-बद्धं यतो हि भवनारम्भेषु आयादिनिर्णयः परमावश्यकः—**

प्रासाद-कर्मणि सूत्रपात-विधिः, प्राच्यादिदिङ्मुखानां वेश्मनामारम्भे निषिद्धा मासाः, आये परिज्ञातव्ये क्षेत्रमानसाधननियमः, आयानयनप्रकारः, प्राच्यादिदिक्षूत्पन्नानामायानां यथाक्रममुद्दिष्टाः ध्वजादिसंज्ञाः तेषां फलं च, विप्रादीनां प्रशस्ता आयाः, तत्तन्निवे-शनानि प्रति तत्तदायानां विनियोग, तेष्वधमाना क्वचिददोषत्वकथ-

नम्, व्ययानयनप्रकारः, समाधिकादिभेदेन त्रिप्रकारस्य व्ययस्य यथाक्रममुद्दिष्टाः पिशाचादिसंज्ञाः, अंशकानयनप्रकारः, गृहादिष्वंशकस्य मुख्यत्वव्यवस्थापनम्, अंशकत्रयस्य संज्ञाः, गृहतारास्तत्संज्ञाश्च, वर्ज्या मध्यमाश्च ताराः त्रयाणां नक्षत्रगणानां संज्ञास्तदन्तर्भूतानि नक्षत्राणि च, भर्तुर्नक्षत्रगणसाम्यादिना विहितस्य गृहस्य शुभफलप्रदत्वकथनम्, गृहविधाववश्यचिन्तनीयानि षट् करणानि, त्र्यादिभिः शुभैस्तैर्यथोत्तरं शुभकरत्वकथनम्, समायव्ययादिवेश्मनां वर्जनीयत्वकथनम्, समसप्तकादिनां गृहाणां कर्तव्यत्वोपदेशः, षट्कोष्ठकादिगृहाणां वर्जनीयत्वकथनम्, गृहजीवितादिविज्ञानोपायादिकम्, मेर्वादीनि षट् छन्दांसि तद्विन्यसनप्रकारश्च, तेभ्यो गृहमूपासख्यादिज्ञानम् । पृष्ठ ४६–५४

## १३. इन्द्रध्वजनिरूपणाध्यायस्त्रयोदशः

**वास्तु-महोत्सवः—इन्द्रः स्थपतीनामासीदिष्टदेवतेति पुराविदो वदन्ति । अतः शक्रध्वजोत्थानात्मको महोत्सवोऽद्यापि स्थपतिषु जेगीयते—**

इन्द्रध्वजोत्थापनसम्बद्धा कथा, इन्द्रध्वजस्यावश्यकता तद्विधानप्रकारोपक्रमश्च, इन्द्रध्वजस्योत्तमाधममध्यमानि नामानि, तस्य मूलाग्रभागयोर्मानम्, कुब्यस्य मानम्, अमपीठमूलपादादीनां मानम्, इन्द्रगृहनिर्माणविधिः, मल्लस्य, शक्रमातुः, कुमारीणां, कन्यकोदयादीनां च मानम्, लकटस्य सूच्याश्च मानादिकम्, मृगालीकल्पनादिकम्, ध्वजयष्टेर्यन्त्राणां चोत्क्षेपणसमयः, तेषां जलाधिवासनप्रकारः, ध्वजस्थाने तेषां निवेशनक्रमः, इन्द्रप्रतिमाप्रतिष्ठा, ध्वजप्रतिष्ठापनविधिः, कुटन्यादियोजनम्, ध्वजपट्टविधानम्, शान्तिहोमविधि, यथावद् हुतस्याग्नेर्वर्णादिना शुभाशुभपरीक्षणम्, होमद्रव्याणामाज्यसमित्कुशपुष्पपत्रादीनां दुष्टत्वे फलम्, बलिदानप्रकारः, शीलवृत्तविद्यावयस्सम्पन्नानां ब्राह्मणानां सन्तर्पणम्, तैः स्वस्तिवाचनम्, प्रतिष्ठाङ्गभूतोऽभिषेक, ध्वजदण्डसमुच्छ्रयविधिः, सपरिकरे ध्वजदण्डे यथावदविलम्बिते स्वस्थानस्थिते फलम्, समुच्छ्रितस्य शक्रध्वजस्य प्राच्यादिदिगाश्रयेण फलम्, भ्रम भित्वा भूमौ प्रतिष्ठमाने तस्मिन् फलम्, तस्य स्थानान्तरभ्रंशादिषु फलम्, रज्जुच्छेदे फलम्, इन्द्रध्वजस्य भङ्गे फलम्, छत्रादीनामिन्द्रध्वजस्य वा पाते फलम्, माल्यविभूषणादीनां च्युतौ फलम्, शक्रवेश्मादीनां विशरणे फलम्, मृगालीलकटादीनां भङ्गे फलम्, ध्वजे निर्घातादीनां पाते फलम्, शक्रोपरि मक्षिकाभिर्मधुच्छत्रकरणे फलम्, शक्रपार्श्वे मक्षिकादीनां भ्रमणे

फलम्, शक्रमूर्धनि श्येनादीनां सङ्गे फलम्, केतौ वायसादीनां सङ्गे फलम् चित्रपटे सुराद्याकाराणां यथावन्निवेशने फलम्, एतेषा कुट्टनपातच्छेद प्लोषादिषु फलम्, चित्रपटस्य पातादिषु फलम्, ध्वजोच्छ्रयविधौ नरादीन चेष्टादिभिर्निमित्तावलोकनम्, तदानी वृष्टिपाते फलम्, उत्सवान्तिमदिवस कृत्यम्, इन्द्रस्थानभूतस्य क्षेत्रस्य मानादिकम्, क्षेत्रप्रमाणेन ध्वजायामादि· कल्पनम्, प्रतिवत्सरं केतुप्रमाणस्य वर्धनम्, यन्त्रपादकुमारिकादीना निवेशनस्थानानि । पृष्ठ ५५–६८

## १४. वास्तुत्रयविभागाध्यायश्चतुर्दशः

**वास्तु-पद-विन्यासः—आधुनिकभाषायां 'साइट-प्लानिंग' इति बोद्धव्यः । वास्तु-पुरुष-विकल्पने वास्तु-पुरुषो विश्वाधारस्य ब्रह्मणो निर्विशेषः । वास्तु-पददेवतानान्तत्र दिक्साम्मुख्ये सूर्यरश्मीणां ईशानाग्निदेवादिदिग्भागैः साकं परामर्शः—**

एकाशीतिपदवास्तौ देवतानां निवेशः पदभोगश्च, शतपदवास्तौ तासा पदभोग·, चतुष्षष्टिपदवास्तौ तासां पदभोगः, सिरानयनप्रकारः ।

पृष्ठ ६९–७१

## १५. नाड्यादिसिरादिविकल्पाध्यायः पञ्चदशः

**वास्तु-पद-विन्यास एव—**

षोडशपदवास्तौ देवतानां पदभोगः, सहस्रपदवास्तौ तासा पद-भोग., चतुष्षष्टिवृत्तवास्तुविधानम्, शतपदवृत्तवास्तुविधानम्, त्र्यश्रादि-वास्तुषु वृत्तवास्तुगतपदविभागातिदेशः, वास्तुपुरुषाकृतौ मुखाद्यवयवकल्पन-वचनम्, वास्तुशरीरगताना नाडीवशादीना परिगणनम्, तत्र नाडीस्वरूप-प्रदर्शन तत्प्रमाण च, वशानुवशमहावशाना मर्मोपमर्मणोः सन्ध्यनु-सन्ध्योश्च स्वरूपप्रदर्शन प्रमाणं च, तत्तद्गृहद्रव्यैर्महावंशादीनां पीडने फलम् ।

पृष्ठ ७२–७४

## १६. मर्मवेधाध्यायः षोडशः

**वास्तु-पद-विन्यास एव—**

नगरादिषु मध्ये एकाशीतिपदेन शतपदेन च विभजनीयं वस्तु, चतुष्षष्टिपदेन विभजनीयं वस्तु, एकाशीतिपदादिषु वास्तुषु मर्मादीनां स्थानानि, द्वारभित्यादिभिर्मर्मवेधे फलम्, द्वारमध्यादिषु द्रव्यान्तरैर्विद्धेषु तेष्वनुवंशादिनिहितेषु च फलम्, वेधेऽपि केषाञ्चिद् क्वचिद् दोषा-भावकथनम् । पृष्ठ ७५–७६

## २१. कीलकसूत्रपाताध्याय एकविंशः

**कीलकारोपण सूत्र-पातश्च वास्तु-क्षेत्रस्य मानादिकं तच्च याज्ञि विधिनातीव पृथुलं प्रतिपाद्यमान प्रतीयते—**

प्रशस्ताः कीलकवृक्षा·, विप्रादीनां विहिताः कीलकवृक्षाः, अशो· दीनां विनियोगे क्वचिद्विशेष·, तत्तद्वर्णानधिकृत्यापरो वृक्षविधिः, वर्णाना की कप्रमाणम्, तेषां सूत्रविधिः, कीलकस्थापनप्रकारः, तत्र कीलकस्थानपू· वेदीकल्पनम्, वेद्यां ब्रह्मकुम्भस्थापनम्, कीलकसंस्करणम्, परश्वाद्युपकर पूजा, अग्निकार्यम्, सुलग्नपरीक्षणम्, पुरोहितसांवत्सरिकस्थपत्यादी पूजा, सूत्रपातसम्बद्धं बलिकर्म, यथोक्तबल्यलाभे कार्यो बलिविशेषः, वि पूजनम्, स्थापनाय प्रथमशङ्कोरुद्धरणनियमा·, भूमौ प्रतिष्ठापितस्य त· परशुना हनने मन्त्राः, शङ्कुमूर्धनि दातव्याना प्रहाराणां सख्या, हन्यम· तस्मिन् शुभाशुभनिमित्तोपलक्षणम्, ताडनसाधननियमः, ताडितस्य कीलव स्य प्राच्यादिषु नमने फलम्, तस्मिन् कूर्चके जाते फलम्, तस्य स्फुट· हस्तभ्रशादिषु फलम्, प्रथमप्रहाराष्टकेन कीलकस्य स्वास्थ्याभावे कर्तव कर्म, शङ्क्वभिषेकादि, सूत्रबन्धनप्रकारः, कीलकस्थानेषु बलिदानविधि साम्ना मन्त्रितेन कुम्भोदकेन वास्तुप्रोक्षणम् । पृष्ठ ८६–६·

# तृतीयः पटलः (पुर-निवेशः)

## २२. नगरादिसंज्ञाध्यायो द्वाविंशः

**न केवलं नगरादिपुरादिपत्तनादिदुर्गादीनामत्र संज्ञा भवनविधानां तत्प्र· काराणां तदङ्गोपाङ्गानाञ्चापि संज्ञा—**

नगरपर्यायाः, नृपाध्युषितस्य नगरस्य संज्ञा, शाखानगरकर्वटनिगम- ग्रामसंज्ञिताना स्वरूपकथनम्, पत्तनपुटभेदनपल्लीजनपदराष्ट्रशब्दिताना तत्कथनम्, गृहपर्यायाः, हर्म्यस्य स्वरूपनिर्देशः, सोपानस्य स्वरूपनिर्देशः, अधिरोहणस्य स्वरूपनिर्देशः, निःश्रेण्याः स्वरूपनिर्देशः, काष्ठविटङ्कस्य स्व- रूपनिर्देशः, सौधस्य स्वरूपनिर्देशः, अभिगुप्त्याख्यस्य स्वरूपनिर्देशः, वाताय- नस्य स्वरूपनिर्देशः, अवलोकनस्य स्वरूपनिर्देशः, उलोकस्य स्वरूपनिर्देशः हर्म्यप्राकारस्य स्वरूपनिर्देशः, वितर्दिकायाः स्वरूपनिर्देशः, ईहामृगस्य स्वरूपनिर्देशः, निर्यूहस्य स्वरूपनिर्देशः, वलीकस्य स्वरूपनिर्देशः, चतुश्शालत्रिशालद्विशालैकशालानाम् स्वरूपनिर्देशः, शालायाः स्वरूप- निर्देशः, वापीसंज्ञस्य स्वरूपनिर्देश·, गर्भगृहस्य स्वरूपनिर्देशः, उपस्था-

नाभिधस्य स्वरूपनिर्देशः, प्रासादस्य स्वरूपनिर्देशः, वलभ्याः स्वरूपनिर्देशः, अलिन्दस्य स्वरूपनिर्देशः, वलभायाः स्वरूपनिर्देशः, अपवरकस्य स्वरूपनिर्देशः, शुद्धान्तस्य स्वरूपनिर्देशः, प्रतोल्याः स्वरूपनिर्देशः, कक्षायाः स्वरूपनिर्देशः, कोष्ठकस्य स्वरूपनिर्देशः, भित्तेः स्वरूपनिर्देशः, महानसस्य स्वरूपनिर्देशः, द्वारकोष्ठकस्य स्वरूपनिर्देशः, प्रवेशनस्य स्वरूपनिर्देशः, उदकभ्रमस्य स्वरूपनिर्देशः, भवनाजिरवनाजिराश्रमाजिराणाम् स्वरूपनिर्देशः, देहल्याः स्वरूपनिर्देशः, द्वारपक्षस्य स्वरूपनिर्देशः, अर्गलार्गलसूच्योः स्वरूपनिर्देशः, परिघफलिहगवाक्षाणाम् स्वरूपनिर्देशः, तोरणस्य तद्विशेषाणाञ्च स्वरूपनिर्देशः, सिंहकर्णस्य स्वरूपनिर्देशः, संयमनाख्यस्य स्वरूपनिर्देशः, मरालपालीप्रणालीप्रद्वाराणां स्वरूपनिर्देशः, प्राकारस्य स्वरूपनिर्देशः, आस्थालकाख्यस्य स्वरूपनिर्देशः, अमेध्यभूमेः स्वरूपनिर्देशः, अवस्करस्य स्वरूपनिर्देशः, परिसरस्य स्वरूपनिर्देशः, अट्टाभिधस्य स्वरूपनिर्देशः, अट्टालकस्य स्वरूपनिर्देशः, अट्टाल्याः स्वरूपनिर्देशः, अट्टालिकायाः स्वरूपनिर्देशः, काष्ठप्रणाल्याः स्वरूपनिर्देशः, धारागृहस्य स्वरूपनिर्देशः, दर्पणगृहस्य स्वरूपनिर्देशः, पक्षद्वारस्य स्वरूपनिर्देशः, गोपुरद्वारस्य स्वरूपनिर्देशः, उपकार्यायाः स्वरूपनिर्देशः, क्षौमाख्यस्य स्वरूपनिर्देशः, पुरीसंवरणस्य स्वरूपनिर्देशः, उपनिष्कलस्य स्वरूपनिर्देशः, उद्यानस्य स्वरूपनिर्देशः, जलोद्यानजलवेश्मनोः स्वरूपनिर्देशः, क्रीडागारस्य स्वरूपनिर्देशः, विहारभूमेः स्वरूपनिर्देशः, देवस्थानस्य स्वरूपनिर्देशः, चैत्यस्य स्वरूपनिर्देशः, सभायाः स्वरूपनिर्देशः, गोष्ठस्य स्वरूपनिर्देशः ।

पृष्ठ ९७–१००

## २३ पुरनिवेशाध्यायस्त्रयोविंशः

**नगर-विधा-रक्षा-वसति-देवतायतनप्रभृतिपुरस्सरपुर-निवेशोऽत्र साकल्येनोपपाद्यते—**

उत्तमाधममध्यमपुराणा मानम्, सर्वपुराणां सामान्यविधिः, उत्तमादिपुरेषु क्वचित् क्वचिद् योजनीया विशेषा, तेषु महारथ्यादिविधानम्, वप्रविधानम्, परिखाविधानम्, वप्रोर्ध्वभागगतप्राकारविधानम्, कपिशीर्षकस्य काण्डवारिण्याश्च प्रमाणम्, अट्टालकादिविधानम्, चरिकाविधिः, पुरद्वारप्रमाणादिकम्, प्रतोल्यादिकल्पनम्, जलभ्रमविधानम्, छिन्नकर्णादीनि गर्हितानि पुराणि, तन्निवासफलं च, पुरनिवेशादिषु शान्त्यादिविधेरावश्यकता तद्विधौ नियोज्या स्थपत्यादयश्च, खेटग्रामादीना प्रमाणादिकम्, उत्तमादिषु राष्ट्रेषु ग्रामसंख्या, पुरेषु सुवर्णकारादीनां निवेशनस्थानम्, प्रपादीनां

स्थानादिकम्, नगरारक्षकदेवताना बाह्याभ्यन्तरभूमिषु स्थापनप्रकारादिकम्
पृष्ठ १०१—११

# चतुर्थः पटलः (भवन-निवेशः)

## जन-भवन-विधासु

### २४. चतुश्शालविधानाध्यायश्चतुर्विंशः

एकशालादिषट्शालान्ताना गृहभेदानां पृथक् पृथगेकीकृता संख्या, अष्ट
ङ्गयुक्ताना तेषां दशशालान्तानां पृथक् पृथगेकीकृता सख्या, गृहद्वितययोगे
निष्पन्नानां गृहविशेषाणा सख्या, उत्तमवर्णिनां विहितानि गृहमालादीन
न्यान्यष्ट वेश्मानि, विप्रादिविषये चतुश्शालादीना मानविकल्पाः, ह
शालालिन्दादीना प्रमाणम्, मूषावकोसिमयोः स्वरूपकथनादिक
भद्रायाः सज्ञाभेदाः, प्रवहणाया स्वरूप फल च, मूषासख्याज्ञानोपयो
प्रस्तारः, चतुश्शालगतानां मूपा-भेदाना सख्या, पृथगनेकधा निवेशि
सवृतैर्विवृतैरप्यलिन्दादिभिर्गृहाणामानन्त्यकथनम्, प्रस्तारे एकभद्रा
विवेचनम्, अष्टानामेकभद्रगृहभेदाना नामानि, अष्टाविशतिभेदानां
भद्रगृहाणा नामानि, षट्पञ्चाशतस्त्रिभद्राणा नामानि, सप्ततेश्चतुर्भद्रा
नामानि, षट्पञ्चाशतः पञ्चभद्राणां नामानि, अष्टाविशतेः षड्भद्रभेदा
नामानि, अष्टानां सप्तभद्राणा नामानि, अष्टभद्रस्य नाम, एषु मूषाविन्या
क्रम, उक्तानामेकभद्रादीना सर्वेषां चतुश्शालभेदाना पिण्डीकृता सख
क्वचित् क्वचित् गृहविशेषेषु मूषावकोसिमयोर्न्यसनक्रमादिकम्, अथ ए
भद्रभेदेषु प्रागायतादिषु मूषास्थितिः तेषा प्रत्येक फलदर्शनम्, द्वि
भेदेषु ईरादिषु मूषास्थितिः, त्रिभद्रभेदेषु ऐन्द्रादिषु मूषास्थितिः, चतु
भेदेषु कृतादिषु मूषास्थिति., पञ्चभद्रभेदेषु कानलादिषु मूषास्थिति षड्
भेदेषु किन्नरादिषु मूपास्थिति, सप्तभद्रभेदेषु भाण्डीरादिषु मूषास्थि
अष्टभद्रे सर्वतोभद्राख्ये मूषास्थितिः। पृष्ठ ११३—१

### २५. निम्नोच्चादिफलाध्यायः पञ्चविंशः

अग्रपृष्ठशब्दयोः परिभाषा, द्रव्यायामादिभिः शालाया आि
फलम्, गृहभूमेर्वामदक्षिणादिभागेषु निम्नोन्नतत्वे फलम्, सच्छत्रादिकं
विध गृह, तल्लक्षणं च, गृहस्य मुखादिभागेऽवलिन्दकल्पना, तत्रैव हलक
न्दकल्पना, तत्फल च, सुसमापिते सति वास्तुनि फलम्, बहुप्रकारेषु नि

षण्णा द्विशालवेश्मना स्वरूपं फलं च, सप्तशालेषु [illegible] प्रकटनम्, गृहसङ्घट्टस्य स्वरूपं फलं च । पृष्ठ १२८–१३०

## २६. द्वासप्ततित्रिशाललक्षणाध्यायः षड्विंशः

मुख्यानां चतुर्णां त्रिशालानां नामानि [illegible], [illegible] हिरण्यनाभभेदाना संज्ञा, तत्सङ्ख्यानां [illegible] पृथङ्नामनिर्देशः, हिरण्यनाभभेदेषु [illegible] लक्षणम्, अवशिष्टाना कनकादीना लक्षणम्, [illegible] णम्, चुल्लीभेदाना भुजङ्गमादीनां लक्षणम्, [illegible] लक्षणम्, पञ्चभद्रकस्वरूपम् । पृष्ठ १३१–[illegible]

## २७. द्विशालगृहलक्षणाध्यायस्सप्तविंशः

द्विशालगृहेषु मुख्यानां षण्णा सिद्धार्थादीना [illegible] मेकादशधा भिन्नाना सिद्धार्थयमसूर्यदण्ड[illegible] ल्लीकाचयोश्च संज्ञा, सिद्धार्थभेदाना [illegible] सहारादीना च लक्षणम्, दण्डगृहभेदाना [illegible] मरुदादीना, चुल्लीभेदस्य रोगाख्यस्य च लक्षणम्, [illegible] भेदाना, काचभेदाना छल्लादीना च लक्षणम् । पृष्ठ १३५–[illegible]

## २८. एकशाललक्षणाध्यायोऽष्टाविंशः

एकशालेष्वलिन्दप्रस्तारः, षोडशाना [illegible] निर्देशादि, एष्वेव भेदेष्वलिन्दविन्यासवैचित्र्येण [illegible] मुदिताख्यानामन्येषामेकशालविशेषाणा लक्षण [illegible] वर्धमानाद्याख्याना लक्षणं फलं च, पूर्वमु[illegible] दारुकल्पनया रूपान्तर, प्रासानामन्येषा [illegible] भेदानां शालापुरतो विन्यस्तैः षड्दारुभि[illegible] शालामध्यविन्यस्तैः षड्दारुभिरेतेभ्य [illegible] शालान्तविन्यस्तषड्दार्वादिभिः प्रकारान्तरमा[illegible] संज्ञाः, अनन्तरोक्तेषु गृहेषु प्रत्येक चतुर्दिक्षु [illegible] षोडशगृहाणा संज्ञाः, एवं भेदप्रभेदैर्वि[illegible] कथनम्, सिद्धार्थस्थितयोर्हस्तिनीमहिष्याख्ययो, [illegible] छगल्याख्ययोश्च शालयोर्यथायथ मेलनेनात्र [illegible] [illegible] फलं च । [illegible]

## २९. द्वारपीठभित्तिमानाद्यध्याय एकोनत्रिंशः

हलकाख्यानां पञ्चदशगृहाणां सञ्ज्ञाविशेषा लक्षणं फलं च, प्रकृताध्याय एवोपरि वक्ष्यमाणानां विषयाणा सङ्ग्रहः, पञ्चाना वर्गाधिपानां स्वरूप-कथनम्, तत्र सामान्यतो भित्त्यलिन्दपीठद्वारोच्छ्रायादीनां प्रमाणप्रदर्शनम्, भद्रनन्दपीठसौरभपुष्कराख्यानां चतुर्णां गृहविशेषाणां लक्षण फलं च ।

पृष्ठ १४२–१४५

## ३०. समस्तगृहाणां संख्याकथनाध्यायस्त्रिंशः

तत्र पञ्चशालानामाहृत्य सख्या, पञ्चशालात्पत्तिप्रकारश्च, अष्टानां पञ्चशालानां संज्ञाः, प्रकारान्तरेण निष्पन्नानां तेषा सज्ञाः, विभद्रादिदश-भद्रान्तानां तेषां प्रत्येकं सङ्ख्या, षट्शालोत्पत्तिप्रकार, षोडशविधानां षट्शालानां संज्ञाः लक्षणं च, अखिलवर्णिनां शुभानि षट्शालानि, तद्भे-दाश्च, राजोचितानि विंशतिः षट्शालानि, विभद्रादिद्वादशभद्रान्तानां षट्शालानां प्रत्येक सख्या, सप्तशालनिष्पत्तिस्तद्भेदाश्च, राजयोग्यानि सप्तशालानि, प्रकारान्तरेण निष्पन्नानि अन्यानि तादृशानि सप्तशालानि, विभद्रादिचतुर्दशभद्रान्तानां सप्तशालाना प्रत्येक संख्या, अष्टशालनिष्पादन-प्रकाराः, विभद्रादिषोडशभद्रान्तानामष्टशालानां प्रत्येकं सख्या, तेषां सर्वेषामेकीकृता संख्या, नवशालनिष्पादनप्रकाराः, विभद्राद्यष्टादशभद्रा-न्ताना नवशालानां पृथक् पृथक् सख्या दशशालनिष्पादनप्रकाराः, विभद्रादि-विंशतिभद्रान्ताना दशशालाना पृथक् पृथक् सख्या, तेषां सर्वेषामेकीकृता संख्या, चतुश्शालादिदशशालान्तानां सर्वेषां वेश्मनां मूषावहनादिना निर्दिष्टाः सङ्ख्याः । पृष्ठ १४६–१५६

# भवनद्रव्येषु—दारु-आहरणे

## ३१. वनप्रवेशाध्याय एकत्रिंशः

द्रव्यानयनार्थे वनप्रस्थानाय विहितो नक्षत्रराश्यादिः, द्रव्यच्छेदनभेदन-वनप्रवेशनकार्यारम्भाणां राशयः, वृक्षपरीक्षणम्, श्मशानाद्युद्भूताना,बालाना वृद्धानां च वृक्षाणां वर्जनीयत्वकथनम्, सारद्रुमाणां वय, तत्र गृहकर्मार्हे वृक्षवयः, अतदर्हे वयसि स्थितानां वृक्षाणां लक्षणम्, तदर्हे वयसि स्थितेष्वपि तेषु वक्ररुक्षादीनां त्यजनीयत्वकथनम्, कुटुम्बिनामर्हा वृक्षाः, गृहकर्मण्युपा-देयानामन्येषामपि वृक्षाणा सामान्यलक्षणम्, गृहार्थे गर्हिता वृक्षाः, वृक्ष-प्रमाणविज्ञानम्, वृक्षनक्षत्रविज्ञानम् [illegible]

वाचनबलिदानादि, वृक्षच्छेदनविधिः, छिद्यमानानां वृक्षाणा स्रवादिनापि तद्धेयोपादेयतानिर्णयप्रकारः, वृक्षपातादिनातज्ज्ञानम्, छेदारम्भे खरोष्ट्रादीनां दर्शने फलम्, छेदादुत्क्षिप्तेष्ववक्षिप्तेषु च वृक्षेषु फलम्, छित्वा पातितानां वृक्षाणां भागशश्छेदने विधिः, गोधादिगर्भितानां तेषां लक्षणम्, मण्डलगतेन तत्तद्वर्णविशेषेण गर्भस्थिततत्तज्जन्त्वादीनां विज्ञानम्, जन्त्वादिगर्भितानां वृक्षाणामुपयोजने फलम्, वनान्तराच्छित्वानीतानां तेषां परिग्रहप्रकारः ।

पृष्ठ १५७–१६०

## भवनद्रव्यप्रमाणेषु

### ३२. गृहद्रव्यप्रमाणाध्यायो द्वात्रिंशः

द्वारप्रमाणम्, प्रकारान्तरेण तत्प्रदर्शनम्, पेद्यापिण्डोदुम्बरद्वारशाखा-रूपशाखाखल्वशाखादीनां प्रमाणम्, शुभाः पञ्चद्वारशाखाः, तलोच्छ्रायः, शालाप्रमाणम्, तलन्यासविधिः, पद्मकस्तम्भविधिः, घटपल्लवकस्तम्भविधिः, कुबेराख्यस्तम्भविधि. श्रीधराख्यस्तम्भविधिः, तलपट्टहीरग्रहणादीना प्रमाणम्, प्रतिमोकादीनां लक्षणम्, भूताख्यादीनां चतुर्णां गृहच्छाद्यानां लक्षणम्, सिंहकर्णादीनां गृहेषु वर्जनीयत्वकथनम्, अन्येषामप्येवविधानां निषेधः ।

पृ० १६१–१६४

## भवन-रचनायाम्

### ३३ चयविध्यध्यायस्त्रयस्त्रिंशः

विंशतिश्चयगुणाः, तद्विपरीताश्चयदोषा अपि विंशतिरिति कथनम्, दक्षिणपश्चिमादिकुड्यानां बहिर्मुखत्वेन विचयने फलम्, कुड्येषु दलितादिषु फलम्, प्राग्दक्षिणादिकर्णानां बहिर्मुखत्वेन प्रवर्तने फलम्, सर्व-बाहुषु चयनेन विशालीकरणे तत्सन्निवेशः, इहायव्ययव्यवस्था, चीयमान-स्यातिसंक्षिप्तविस्तृतत्वादिषु सज्ञान्तर फल च, भित्तिचयनप्रकार. ।

पृ० १६५–१६७

## भवन-भूषायाम्

### ३४. अप्रयोज्यप्रयोज्याध्यायश्चतुस्त्रिंशः

राजादीनां वेश्मस्वप्रयोज्यानां परिगणनम्, तेषु प्रयोज्यानां प्रदर्शनोप-क्रमः, तत्र प्रयोज्या देवता, द्वारेषु प्रयोज्याः प्रतीहार्यादिप्रतिकृतयः तत्रैव निधीनां लक्ष्म्याश्च निवेशनप्रकारः, गृहबाह्याभ्यन्तरभित्तिष्वालेख्यानां नियमाः, वासधाम्नि निवेशनीयानामालेख्यानां विधिः, गृहभित्तीनामधोभागेषु

प्रेक्षासङ्गीतभूम्यादिषु च प्रयोज्याना लेख्यानां विधि·, वेश्मनि प्रयोक्तव्यत्वेनोक्ताना सर्वेषा पीठशय्यासनसभादेवकुलादिष्वप्यतिदेश: । पृ० १६८-१७१

## भवनाङ्गेषु, तेषां भङ्गेषु वेधेषु दोषेषु च

### ३५ द्वारगुणदोषाध्याय: पञ्चत्रिंश:

विप्रादिविषये गृहाणां द्वाराणा च स्थानानि तेषु वास्तुद्वारगृहद्वाराणा निवेशननियमा:, उत्सङ्गादयश्चत्वारो निवेशा:, तत्रोत्सङ्गलक्षणम्, हीनबाहुकादीनां लक्षणम्, ब्राह्मणाद्यावासस्थानकल्पनेषु विशेषविधि, वर्णानामुत्तमा भूमिकासख्या, तेषां गृहोर्ध्वप्रमाणम्, देवादिविषये विशेषविधि:, तत्तद्वर्णानामवरा भूमिकासख्या, उत्कृष्टस्य वास्तुद्वारस्य गुणा:, द्वारकल्पनसम्बद्धा नियमा·, रथ्यादिभिर्द्वारवेधे फलम् भिन्नदेहाख्यस्य वास्तुनो लक्षण पूर्वादिद्वाराणाम्, निवेशनस्थानानि द्वारेष्व विहितस्थाने निवेशितेषु फलम् । पृष्ठ १७२–१७६

### ३६. द्वारभङ्गफलाध्याय: षट्त्रिंश:

उक्ताना नवकर्मविधीनां ग्रामादिष्वप्यतिदेश , नवकर्मणि स्निग्धत्वादिगुणयुक्तेषु तद्विहीनेषु च द्रव्येषु फलम्, पूर्वादिषु नगरभागेषु रम्ये सत्सु राज्ञ फलम्, तेष्वरम्येषु तस्य फलम्, देवागारपुरद्वारादिपूत्पन्नानि शुभाशुभानि राज्ञ एवेति कथनम्, उक्तेषु स्थलविशेषेषु नवकर्मण्यूर्ध्ववशार्गलादीन मुख्याङ्गाना भङ्गे राज्ञ: फलम्, तद्भङ्गे ग्रामे सति फलम्, दिगुत्थि गृहोत्थिते च तस्मिन् फलभाज·, इह सर्वनिमित्तेषु शुभाशुभानां फला कालनियम:, वास्तुनि पुराणत्वव्यपदेशस्य काल:, नवकर्मणि निष्ठि तुम्बिकादीनां भङ्गे फलम्, लुमामुण्डकानुपूर्वमुण्डगोधानागपाशाख्या गृहद्रव्याना भङ्गे फलम्, कपाटस्यार्गलापार्श्वस्य तोरणस्य वास्तुमध्य सोपानस्य वेदिकाया गवाक्षस्य पट्टस्तम्भस्य च विनाशे फलम्, गजशुण्डाय कपोताल्या. स्थपनीयपट्टिकाया विटङ्कस्य तुलाया: शालास्तम्भस्य स्तम्भ शीर्षादेश्च भङ्गे फलम्, प्रतिमोकभङ्गवाहिन्या काशतलकप्रतिच्छन्नप्रासा मण्डलवलभीनां भङ्गे फलम्, प्रलीने विलीने विनष्टे च प्रासादे फल पूर्वोक्तेषु गृहावयवेषु स्निग्धत्वादिगुणविशिष्टेषु फलम्, कर्णिकाभ्यन्त स्थूणाशालापादहानौ फलम् । पृष्ठ १७७–१८

### ३७. तोरणभङ्गादिशान्तिकाध्यायस्सप्तत्रिंश:

प्रविष्टाः सन्तो दोषसूचकाश्चतुर्विधाः कपोताः, तत्प्रवेशफलं च, कपोतप्रवेश-दोषप्रशमनविधिः ।                                                    पृष्ठ १८१–१८३

## भूप्लवनादिषु दोषेषु

### ३८. गृहदोषनिरूपणाध्यायोऽष्टात्रिंशः

गृहविधौ वर्ज्या भूमयः, भूप्लवनम्, चैत्रादिमासेषु निर्मिताना गृहाणां फलम्, कीलकादीना स्थानम्, तत्तद्दिङ्मूढेषु वेश्मसु फलम्, पुरे प्रासादानीना निवेशस्थानम्, वलितादीनि चतुर्विधानि दुष्टगृहाणि, तेषां लक्षण फलं च, मूषकोत्करादिभिर्दुष्टाना भुवा वर्जनीयत्व-कथनम्, तासु वास्तुनिवेशने फलम्, वेश्मस्वनिष्टो मुखायामः, मानुष-शालाया मूषालिन्दयोरावश्यकता, देवागारशालाया तदभावश्च, खादका-ख्यस्य वेश्मनो लक्षण फल च, सशल्यादिकं मर्मदोषचतुष्टयम्, छिन्नाख्यस्य वास्त्वङ्गस्य लक्षण फल च, स्वगृहद्वयमध्येन वर्त्मनो निर्वाहे फलम्, मार्ग-वेधस्य स्वरूप फलञ्च, उत्सङ्गादीना चतुर्णा प्रवेशानां स्वरूप फल च, शालाभेदस्य स्वरूप फल च, विकोकिलगृहस्य स्वरूप फलं च, सीमाशाला-प्रभिन्नेषु प्रासादादिषु फलम्, गर्भे चन्द्रावलोकिताया निषेधः, गवाक्षके मूषा-निवेशनस्यावश्यकता, गण्डकुक्षिपृष्ठकक्षाख्यानामङ्गाना गृहात् पृथक्करणे फलम्, गण्डादीनां स्वरूपनिर्देशः, स्थापितानां द्वाराणा संरोधे फलम्, गृह-श्रोत्रादीना रोधे फलम्, कृत्ताना गवाक्षालोकनानां चयने फलम्, प्राच्यादिषु चीयमानाया भित्तेर्बहिर्गमने फलम्, चीयमानाना प्राग्दक्षिणादिकर्णाना बहिर्गमने फलम्, मल्लिकाकृतिमन्दिरस्य लक्षणम्, तत्रायव्ययव्यवस्था, सक्षिप्तगृहस्य लक्षणं फल च, कर्णेषु विषमोन्नतेषु फलम्, गृहमध्ये द्वार-करणनिषेध., द्वारवेधेऽनिष्टद्रव्ययोजने च फलम्, नवेन पुराणयोजने फलम्, मिश्रजातिद्रव्योत्थेषु गृहादिषु फलम्, तत्तत्स्थानेष्वधिवास्य प्रतिष्ठिताना पुनश्चालने फलम्, अन्यवास्तुच्युतस्यान्यवास्तौ योजने फलम्, देवदग्धेन द्रव्येण गृहकरणे फलम्, सूर्यद्रुमध्वजच्छायाना गृहद्वारातिक्रमणे फलम्, ध्वजच्छायायाः स्वरूपनिर्देश, निषिद्धा गृहताराः, निम्नोन्नत्वादिदोष-युक्तस्याग्रतरद्वारस्य करणे फलम्, नागदन्तादीनां द्वारमध्ये निवेशनस्य, तेषा विषमस्थितेश्च निषेधः, गृहे इतिहासाद्युक्तवृत्तान्तप्रतिरूपणस्य निषेध ,इन्द्रजाल-तुल्याना, मिथ्याकृताना भीषणाना च प्रतिरूपणस्य निषेध , स्वयमुद्घाटन कुर्वतः, सशब्दस्य, पादशीतलस्य च द्वारस्य निवेशने फलम्, अधोमुखत्वेन प्रत्यग्यास्याननत्वेन च द्रव्यस्य निवेशने फलम्, स्तम्भद्वारस्य भित्तेश्च

वैपरीत्येन निवेशनस्य निषेधः, उपर्युपरिभूमिकाकल्पने तत्र क्षणक्लृप्तौ च नियमाः, शालाया निम्नत्वे अलिन्दस्याधिक्ये च फलम्, उपरिभूमिषु द्वार-निवेशने नियमाः, आध्मातादिद्वाराणा निवेशने फलम्, चत्वररथ्यादिभिर्द्वारवेधे फलम्, हीनाधिकप्रमाणस्य द्वारस्य निवेशने फलम्, कुशादिद्वाराणा निवेशने फलम्, अन्तर्द्वारादुच्चस्य बहिर्द्वारस्य विशङ्कटस्य च द्वारस्य निवेशने फलम्, पट्टसन्धौ द्वारमध्ये निवेशिते फलम्, तुलायामुपतुलाया च द्वारि तिर्यङ्निवेशिताया फलम्, जयन्त्यामनुवश प्रासाया फलम्, ललाटिकाख्यायास्तुलायाः स्वरूप फल च, यज्ञोपवीतन्याख्यायास्तस्याः स्वरूपं फल च, भारतुलायाः मध्यवेधे फलम्, अखिलैस्तुलाग्रैर्भित्तिभेदकरणस्य निषेधः, भारपट्टे ब्रह्मपद-न्यस्ते फलम्, अयुक्तयोर्युक्तयोर्वा सन्धेर्भारपट्टगतसधौ योजने फलम्, अनुवश-माश्रित्य भोजने शयने च कृते फलम्, नागदन्तके तिर्यक्स्थिते शयनागार-विन्यस्ते च फलम्, पक्षिराजघण्टाध्वजच्छत्रादीना गृहे निषेध', गृहनमने पञ्चहेतव, अनुचितस्थौल्यादिकैर्द्रव्यैर्गृहस्य वैरूप्ये दृष्टान्त. । जीर्णघुण-क्षतादीना दारूणां वर्जनीयत्वकथनम्, गृहकर्मणि वर्जनीयवृक्षाः, द्वारैर्भित्तिभिश्च मर्मपीडाया फलम्, कायसन्धिपालादिषु मर्मस्थानस्थितेषु फलम्, स्तम्भादिभिर्द्वारमध्ये निपीडिते फलम्, षड्दारुकाणा द्वाराणां च मध्येषु कर्णद्रव्यादिभिर्विद्धेषु फलम्, नागदन्तादिभिः शय्यावेधे फलम्, गृहमध्यभागे द्वारे निवेशिते फलम्, द्रव्येण महामर्मपीडायां फलम्, गृहस्य शून्यतापादका दोषाः, विभागपदहीनेषु वास्त्वादिषु फलम्, पुरप्रासाद-वेश्मनां परिसरे वर्जनीया वृक्षाः, द्रव्यायामोच्छ्रायविस्ताराणामाधिक्ये फलम्, घातितेषु पातितेषु च स्तम्भद्वारादिषु फलम्, भर्तुरनिष्टफलदायिनो गृहस्य सामान्यलक्षणम् ।

पृष्ठ १८४–१९३

## ३९. शान्तिकर्मविध्यध्याय एकोनचत्वारिंशः

कर्णिकास्थापनम्, कर्णिकासु वायसादीनामधिरोहणे फलम्, तासां गृध्रादिभिर्घर्षणे शान्तिकविधिः, गृहाङ्गाना मधुसञ्चयादिभ्यो रक्षणीयत्वकथनम्, गृहदारूणामिन्द्रकीलादीना भङ्गादिषु फलम्, नवदारुभङ्गादिषु प्रतिविधानम्, स्थूणामल्लकपृष्ठवशाना भङ्गे शान्तिविधिः, वारणसङ्ग्रह-स्थूणयोपधिकायतुलानां भङ्गे तद्विधिः, कर्णिकाभ्यन्तरस्थूणाशालापादयुग-तुलापादादीना भङ्गे तद्विधिः, प्रधानस्थूणाग्रवक्रतादिषु फलम्, विशेषत-श्चतुर्णां तुलादीनां वास्तुमुख्याङ्गाना हिसने शान्तिविधानकथनम् ।

पृष्ठ १९४–१९८

## प्रथमः पटलः
औपोद्घातिकः

## द्वितीयः पटलः
सामान्यः पारिभाषिकः

## तृतीयः पटलः
पुर-निवेशः

## चतुर्थः पटलः
भवन-निवेशः

# प्रथमः पटलः

## (औपोद्घातिकः)

१. **वास्तु-शास्त्र-प्रतिष्ठायां—**
**वास्तुत्रयी—**
(अ) वास्त्वाधारा पृथ्वी
(ब) वास्तु-सरक्षकः पृथुः
(स) वास्त्वाचार्यो विश्वकर्मा

२. **वास्तु-कला-प्रवर्तने—**
**आद्य-स्थपतेः विश्वकर्मणः**
तस्य मानससुतेभ्यश्च स्थपतिकोटीनां शिल्पिवृन्दानाञ्चाविर्भावः

३. **वास्तु-शास्त्र-विषयेषु—**
**वास्तु-कला (स्थापत्यम्),**
**प्रतिमा-कला (तक्षणम्),**
**चित्र-कला (आलेख्यम्)**
—इति प्रमुखायाः त्रय्याः वैज्ञानिकं पारिभाषिकञ्च विषयविभागः प्रदर्शनम्

४. **वास्तु-सर्गयोः—**
**आयोजनं सर्गश्च**

५. **भारतीय-वास्तु-विज्ञानस्य विशालायां दृशि—**
**सम्पूर्णेयं पृथ्वी वास्तु-विषयः अतः भूगोल-विद्यायाः अत्रानिवार्य-ज्ञान-विज्ञान-जिज्ञासायां भुवनकोशः**

६. **भूतले प्रथम-भवन-जन्म-कथायां**
**सहदेवाधिकारः**

७. **वास्तु-विनियोगे—**
**वर्णाश्रमधर्माः**

# महासमागमनम्

देवः स पातु भुवनत्रयसूत्रधार-
स्त्वां बालचन्द्रकलिकाङ्कितजूटकोटिः ।
एतत् समग्रमपि कारणमन्तरेण
कात्स्न्यादसूत्रितमसूत्र्यत येन विश्वम् ॥१॥
सुखं धनानि ऋद्धिश्च सन्ततिः सर्वदा नृणाम् ।
प्रियाण्येषां तु संसिद्ध्यै सर्वं स्याच्छुभलक्षणम् ॥२॥
यच्च निन्दितलक्ष्मा (च ? त्र) तदेतेषां विघातकृत् ।
अतः सर्वमुपादेयं (यद्) भवेच्छुभलक्षणम् ॥३॥
देशः पुरं निवासश्च सभा वेश्मासनानि च ।
यद्यदीदृशमन्यच्च तत्तच्छ्रेयस्करं मतम् ॥४॥
वास्तुशास्त्रादृते तस्य न स्याल्लक्षणनिश्चयः ।
तस्माल्लोकस्य कृपया शास्त्रमेतदुदीर्यते ॥५॥
अथैकदा जगज्जन्महेतुमम्बुरुहासनम् ।
पृथ्वी पृथुभयक्रान्ता चकिताक्षी समाययौ ॥६॥
प्रणम्य प्रणतिप्रह्वनिखिलत्रिदशेश्वरम् ।
सगद्गदमुवाचेति भूताधात्री पितामहम् ॥७॥
भगवन्नहमेतेन पृथुना पृथुतेजसा ।
उपद्रुता त्वां शरणं प्राप्ता त्रायस्व मां ततः ॥८॥
वदन्त्यामिति मेदिन्यामाविरासीदथो पृथुः ।
संरम्भमुक्तहृदयो ब्रह्माणं प्रणनाम च ॥९॥
जगादैनमथ स्निग्धध्वनिगम्भीरया गिरा ।
कुर्वंस्तद्यानहंसानां पयोदध्वनिशङ्कितम् ॥१०॥
त्वयास्मि जगतां नाथ ! जगतोऽधिपतिः कृतः ।
स्थापितानि च भूतानि सर्वाण्यपि वशे मम ॥११॥
तेष्वियं मम विश्वेश ! कदाचिद् वशवर्तिनी ।
समीकरोमि पाषाणजालान्यस्याः किलाधुना ॥१२॥

व्यस्तानि धनुषा तावद् गौर्भूत्वेयं पलायिता ।
दोग्धुकामोऽहमप्येनां चिरमन्वगमं महीम् ॥१३॥
यत्रक्कापि प्रयान्त्येषा तत्र मामेव पश्यति ।
अपश्यन्त्यन्यतस्त्राणमदुग्धा त्वामुपस्थिता ॥१४॥
अस्यां वर्णाश्रमस्थानविभागश्च विधास्यते ।
इयं च दुर्गमानेकक्षोणीधरकुलाकुला ॥१५॥
विधास्येऽस्यां कथं त्वेतदिति मे शङ्कितं मनः ।
पृथुनेत्यथ विज्ञप्तो भगवानब्जसम्भवः ॥१६॥
उवाच बोधयन्नेनं कृत्वा भूमिं च निर्भयाम् ।
इयं मही महीपाल ! विधिवत् पालिता सती ॥१७॥
सस्यैरुपायनिष्पन्नैस्तव भोग्या भविष्यति ।
यच्च ते स्यादभिप्रेतं स्थानादिविनिवेशनम् ॥१८॥
तदेष त्रिदशाचार्यः सर्वसिद्धिप्रवर्तकः ।
सुतः प्रभासस्य विभोः स्वस्रीयश्च बृहस्पतेः ॥१९॥
विश्वातिशायिधीः सर्वं विश्वकर्मा करिष्यति ।
राजन्नसौ महेन्द्रस्य विदधावमरावतीम् ॥२०॥
अन्या अप्यमुना रम्याः पुर्यो लोकभृतां कृताः ।
त्वया क्षेत्रीकृतां मूर्तिं दृष्ट्वा साद्रिद्रुमामसौ ॥२१॥
सन्निवेशान् पुरग्रामनगराणां विधास्यति ।
तद्गच्छ वत्स ! लोकानामितस्त्वं हितकाम्यया ॥२२॥
भयोज्झिता त्वमप्युर्वि ! पृथोः प्रियकरी भव ।
काले स्मृतः स्मृतः पुण्यो राज्ञः प्रियचिकीर्षया ॥२३॥
त्वमप्यखिलमेवैतद् विश्वकर्मन् ! करिष्यसि ॥२४½॥
इत्युक्त्वा गमनमुपेयुषि प्रजेशे
स्वं स्वं स्थानं क्षितिभुजि चाश्रिते मुदोर्व्याम् ।
प्रालेयावनिभृतमाजगाम
खेलत्सिद्धस्त्रीपरिगतमाशु विश्वकर्मा ॥२५॥

इति श्रीमहाराजाधिराजभोजदेवविरचितसमराङ्गणसूत्रधार-
वास्तुशास्त्रे महासमागमनोनाम प्रथमोऽध्यायः

# विश्वकर्मणः पुत्रसंवादः

अथ पृष्ठे हिमगिरेः शशाङ्कशुचिरोचिषि ।
सिद्धामरवधूभुक्तमणिमञ्जुगुहागृहे ॥१॥
विस्तीर्णासनमासीनं सर्वज्ञमथ संस्मृताः ।
आययुर्विश्वकर्माणं चत्वारो मानसाः सुताः ॥२॥
जयो विजयसिद्धार्थौ चतुर्थश्चापराजितः ।
तमुपगम्य शिरसा नेमुः प्राञ्जलयो मुनिम् ॥३॥
तानुवाच मुनिर्वत्सा विदितं वो यथा पुरा ।
वास्तु ब्रह्मा ससर्जादौ विश्वमप्यखिलं तथा ॥४॥
धर्म्यं कर्म तदा श्रैष्ठ्यप्राप्त्यै लोकावनानि च ।
व्यवस्थाप्य चकारैष लोकपालस्य कल्पनाम् ॥५॥
अहमप्यमुना विश्वनाथेनाम्बुजजन्मना ।
लोकानां सन्निवासार्थमादिष्टोस्मि स्वयम्भुवा ॥६॥
रम्याणि नगरोद्यानसभास्थानान्यथो मया ।
सुरासुरोरगादीनां निर्मितान्यात्मबुद्धितः ॥७॥
गत्वोर्वीं वैन्यनृपतेर्वत्साः प्रियचिकीर्षया ।
नगरग्रामखेटादीन् करिष्यामि पृथक् पृथक् ॥८॥
कार्ये त्वमस्मिन् सकले मम विश्वसृजार्पिते ।
सम्यक्साहायकैर्भाव्यं भवद्भिरिति नः स्थितम् ॥९॥
यतस्त्रिभुवनालोकप्रद्योतस्याब्जिनीपतेः ।
सहायतां तमश्छेदे कलयन्ति मरीचयः ॥१०॥
स्वयं करिष्येऽहमथो निवासाय पृथोः पुरीम् ।
विचित्रनगरग्रामखेटामतिमनोहराम् ॥११॥
भवन्तः पुनरागत्य चत्वारोऽपि चतुर्दिशम् ।
तांस्तान् निवेशान् कुर्वन्तु पृथग्जनकृताश्रयान् ॥१२॥
अन्तरेष्वध्वपाथोधिशैलानां सरितां तथा ।
विधातव्यानि दुर्गाणि नृपाणां भयशान्तये ॥१३॥

वर्णप्रकृतिवेश्मानि संस्थानानि च लक्ष्मभिः ।
विधेयानि प्रतिग्रामं प्रतिभूः प्रतिपत्तनम् ॥१४॥

तानित्थमात्मतनयानभिधाय सम्यक्
सारार्थभूतमपरिस्फुटतोज्झितं च ।
स्थानार्पितोरुभरनिर्वृतचित्तवृत्ति-
स्तूष्णीं प्रभासतनयो नयविज्जगाम ॥१५॥

इति श्रीमहाराजाधिराजभोजदेवविरचितसमराङ्गणसूत्रधार-
वास्तुशास्त्रे विश्वकर्मणः पुत्रसंवादो नाम द्वितीयोऽध्यायः

# प्रश्नः

अथ तेषु जयो नाम वाक्यं तद् विश्वकर्मणः ।
श्रुत्वा कृताञ्जलिः प्राह स्निग्धगम्भीरया गिरा ।।१।।
ज्ञानैकनिधिरप्यस्मान् यत् सहायतया किल ।
वृणोषि तेन वयमात्मानं बहु मन्महे ।।२।।
तदिदानीं हितार्थे नः प्रजानामपि च प्रभो !
अप्रमेयप्रभावस्त्वं सर्वमाख्यातुमर्हसि ।।३।।
पूर्वमेकार्णवे जाते जगति प्रलयं गते ।
महाभूतामरपुरीज्योतिषां कथमुद्भवः ।।४।।
किमाकारा किमाधारा किंप्रमाणा च मेदिनी ।
विस्तृतिः परिधिश्चास्या बाहुल्यमपि कीदृशम् ।।५।।
उच्छ्रायव्यासदीर्घत्वैः कैः केऽस्यां कुलभूभृतः ।
कति ख्यातानि वर्षाणि द्वीपा नद्योऽब्धयस्तथा ।।६।।
काः सूर्येन्दुग्रहर्क्षादिगतयश्च पृथक् पृथक् ।
भूमेरुपरि किं चैषामन्योन्यं प्रोक्तमन्तरम् ।।७।।
किमाधारं दिवि ज्योतिश्चक्रं भ्रमयते च कः ।
लोके कथं महाभूतान्यूर्ध्वाधो बिभ्रति स्थितिम् ।।८।।
युगधर्मव्यवस्थाभिः काश्चादौ लोकवृत्तयः ।
कश्चादिमस्ततो राजा ग्रहाणां वर्णिनां कथम् ।।९।।
कति देशाः कति भुवः पृथक्त्वेन निरूपिताः ।
कार्यः क्व च कथं सन्निवेशो जनपदाश्रयः ।।१०।।
व्यक्तचिह्नैः स्वनस्पर्शगन्धवर्णरसादिभिः ।
काः शस्ता निन्दिताः काश्च पुराणामपि भूमयः ।।११।।
कार्यं केन विधानेन भूभृत्पुरनिवेशनम् ।
किं फलं सुनिविष्टेऽस्मिन् दुर्निविष्टे च किं पुनः ।।१२।।
कतिप्रकारं दुर्गं च दुर्गकर्मक्रमश्च कः ।
किमग्रपुरसंस्थानमनिन्द्यं किं च निन्दितम् ।।१३।।

कश्चात्रानुक्रमविधिः प्रमाणैरुपपादितः ।
प्राकारगोपुराट्टालपरिखावप्रकर्म च ॥१४॥
तमङ्गनिर्गमद्वारप्रतोल्यट्टालकादिभिः ।
कीदृशः प्रविभागश्च रथ्याचत्वरवर्त्मभिः ॥१५॥
भूमिप्रमाणसंस्थानं सीमा च क्षेत्रदिक्पथैः ।
नगरग्रामखेटानां निवेशाः स्युः पृथक् पृथक् ॥१६॥
पुरस्याभ्यन्तरे पूर्वं कैर्द्रव्यावयवक्रमैः ।
कस्मिन् स्थाने कथं कार्यं शक्रध्वजनिवेशनम् ॥१७॥
प्रतिसंवत्सर तस्य नियुक्तस्य कथं पुनः ।
हिताय नृपलोकानां विधातव्यो महोत्सवः ॥१८॥
गृहेषु केषु केष्वत्र कासु कासु ककुप्सु च ।
भागैर्बाह्यान्तरैः कैः कैः कार्याः काः काश्च देवताः ॥१९॥
कैः कैर्यानपरीवारवर्णरूपविभूषणैः ।
कार्याः कैः कैः सुरा वस्त्रवयोवेषायुधध्वजैः ॥२०॥
प्रमाणमितिसंस्थानसंख्यानोच्छ्रयलक्ष्मभिः ।
प्रासादाः कस्य के वा स्युः सुरराजद्विजातिषु ॥२१॥
प्राकारपरिखागुप्तं पुरे स्याद् गोपुरं क्व च ।
युग्ममध्याम्बुवेश्मानि क्व च स्युः क्व महानसम् ॥२२॥
कोष्ठागारायुधस्थानभाण्डागारनिवेशनैः ।
व्यायामनृतसङ्गीतस्नानधारागृहादिभिः ॥२३॥
शय्यावासगृहप्रेक्षावेश्मादर्शगृहैः पृथक् ।
क्रीडादोलालयारिष्टगृहान्तःपुरवेश्मभिः ॥२४॥
विटङ्कभ्रमनिर्यूहकक्षासंयमनादिभिः ।
अशोकवनिकाभिश्च लतामण्डपवेश्मभिः ॥२५॥
वापीभिर्दारुगिरिभिश्चित्राभिः पुष्पवीथिभिः ।
एतैर्विशेषैरन्यैश्च विचित्रैर्विपिनाश्रयैः ॥२६॥
मानोन्मानक्रियायामद्रव्याकृतिविनिर्मितः ।
निकेतननिवेशः स्याद् राज्ञां भागाश्रितः कथम् ॥२७॥
पुरोधःसैन्यभूश्रेष्ठदैवचिन्तकमन्त्रिणाम् ।
कं कं च भागं प्राप्य स्युर्निवेशा नृपवेश्मनः ॥२८॥
पुरे स्युर्दिक्षु भागेषु पदभागेषु केषु च ।
विप्रराजन्यविट्शूद्रास्तज्जैरन्तरजैः समम् ॥२९॥

तथा कृषितुलाशिल्पकलापण्योपजीविनः ।
हिंसाश्रिताश्च पुरुषा निवेश्याः स्युः कथं क्व च ॥३०॥
निवेशाः कीदृशाश्चैषां कियन्तो वा भवन्ति ते ।
शस्यन्ते केन वा केषां कैः प्रवेशजलभ्रमैः ॥३१॥
धिष्ण्यमाद्यं कतिविधं द्रव्याण्याद्यानि कानि वा ।
हेतुरेषां च सर्वेषां स्याच्च कीदृगनुक्रमः ॥३२॥
भजन्ते योगमन्योन्यं कानि द्रव्याणि कैः सह ।
कानि योगं न गच्छन्ति कैर्वा कः क्व वसेत् पुमान् ॥३३॥
इष्टकाकर्म किं चेष्टं कीर्तिता कतिधा च भूः ।
परिकर्मक्रमस्तासां वह्न्यम्बुपवनैश्च कः ॥३४॥
गुरुवर्णिध्वजोर्वीशतद्भृत्यप्रतिमा (:?) पुराम् ।
वृक्षाः के के प्रशस्ताः स्युर्गृहार्थं के च गर्हिताः ॥३५॥
तच्छेदस्रावसंभूतं शब्ददिक्पातगर्भजम् ।
विज्ञायते कथं कर्तृकारकादिशुभाशुभम् ॥३६॥
प्रमाणं तक्षणच्छेदैः शोधितानां कथं भवेत् ।
आहृत्य स्थापनं पूर्वं दारुणां स्थानके क्व च ॥३७॥
सामान्यतोऽखिलानां काः काश्च जातेर्विशेषतः ।
प्रशस्तैर्लक्ष्मभिर्युक्ता भूमयः परिकीर्तिताः ॥३८॥
शल्योद्धारविधिः कीदृक् कीदृशं भूमिकर्म च ।
दिग्ग्रहः सूत्रणं चाधिवासनं च कथं भवेत् ॥३९॥
प्रमाणं मूलपादस्य शिलान्यासे च को विधिः ।
विभज्यते कथं वेश्म शालालिन्दविभाजनैः ॥४०॥
मानानि कानि भित्तीनां पीठानामुच्छ्रयाश्च के ।
कथं तानि विकल्प्यानि वर्णानां मेखलादिभिः ॥४१॥
समस्तकानां स्तम्भानां द्वारस्तम्भासनैः सह ।
नागवीथ्युपधानानां समं कण्ठविनिर्गमैः ॥४२॥
जयन्तीसङ्ग्रहतुलाकार्याणां वास्तुनोऽपि च ।
कीदृशं फलकानां च प्रमाणं परिकीर्तितम् ॥४३॥
स्वमानात् सर्ववर्णानां तलोच्छ्रायास्तु कीदृशाः ।
का गवाक्षकपोतालिवेदिकाजालकक्रियाः ॥४४॥
स्थूणा निसृष्टिकोत्सूका मृगा(ल्योः ल्यु)पतुलास्तथा ।
सान्तःप्राणिशिरोवंशाः किंप्रमाणाः प्रकीर्तिताः ॥४५॥

